# रकारात्मक श्रीरामसहस्रनामस्तोत्रम्*

श्रीदेव्युवाच

प्राणनाथ! शिव! शम्भो करुणानिधिशङ्कर!।
श्रीरामतत्त्वजिज्ञासा जायते परमेश्वर!।।१।।
रहस्यं रामचन्द्रस्य रकाराक्षरपूर्वकं।
रामसाहस्रकं ब्रूहि यद्यहं तव वल्लभा।।२।।
स्त्रियों वा पुरुषो वाऽपि स्मृत्वा ब्रह्मत्त्वमाप्नुयात्।
तद्रहस्यं समासेन वदस्व करुणानिधे!।।३।।

श्री शिव उवाच

महागुप्तं महागोप्यं महामङ्गलदायकं।
महासिद्धिकरं पुंसां महाव्याधिविनाशनम्।
महापापहरं साक्षात् सर्वसौभाग्यवर्धनम्।।४।।
राज्यं देयं शिरो देयं न देयं रामतत्त्वकं।
आत्मतुल्यं धनं देयं स्त्रीपुत्रकं देयं शिवे!।।५।।
तथापि नामसाहस्त्रं देवानामपि दुर्लभं।
न प्रोक्तं कस्यचित् काऽपि कस्मिन् काले महेश्वरि!।
तव स्नेहात् प्रवक्ष्यामि शृणुष्व शुभानने!।।६।।

**विनियोग:** – ॐ अस्य श्रीरकारादिश्रीरामसहस्रनामस्तोत्रमन्त्रस्य श्रीभगवन्नारायण ऋषि: देवी गायत्री छन्द: श्रीरामचन्द्रो देवता श्रीरां रां ल्कीं बीजं ह्रीं शक्ति:, ॐ अव्यक्तं कीलकं मम धर्मार्थकाममोक्षार्थे जपे विनियोग:।

**ऋष्यादिन्यास:**– ॐ श्रीभगवन्नारायणऋषये नम: शिरसि श्रीदेवी गायत्री छन्दसे नम: मुखे, श्रीरामचन्द्रदेवतायै नम: हृदि, रां रां ल्कीं बीजाय नम: गुह्ये ह्रीं शक्तये नम: नाभौ, ॐ अव्यक्तकीलकाय नम: पादयो: मम धर्मार्थ-काममोक्षार्थे जपे विनियोगाय नम: सर्वाङ्गे।

**करन्यास:** – ॐ रीं श्रीं क्रुद्धोल्काय स्वाहा - अंगुष्ठाभ्यां नम:।
ॐ रां ल्कीं महोल्काय स्वाहा - तर्जनीभ्यां नम:।
ॐ रां ह्रीं वीरोल्काय स्वाहा - मध्यामाभ्यां नम:।
ॐ रां रीं विद्युल्काय स्वाहा - अनामिकाभ्यां नम:।
ॐ रां ल्कूं ल्कीं अधोल्काय स्वाहा - कनिष्ठिकाभ्यां नम:।
ॐ रां रां रीं श्रीं ल्कीं ह्रीं रां ल्कूं ल्कीं सहस्रोल्काय स्वाहा-कर-तलकरपृष्ठाभ्यां नम:।

**करन्यासः** – ॐ रीं श्रीं क्रुद्धोल्काय स्वाहा - हृदयाय नमः।
ॐ रां ल्कीं महोल्काय स्वाहा - शिरसे स्वाहा।
ॐ रां ह्रीं वीरोल्काय स्वाहा - शिखायै वषट्
ॐ रां रीं विद्युल्काय स्वाहा - कवचाय हुं।
ॐ रां ल्कूं ल्कीं अधोल्काय स्वाहा - नेत्रत्रयाय वौषट् ।
ॐ रां रां रीं श्रीं ल्कीं ह्रीं रां ल्कूं ल्कीं सहस्रोल्काय स्वाहा-अस्त्राय फ

**ध्यानम्** –

नीलेन्दीवरतुल्यश्यामवदनं पीताम्बरालंकृतम्।
मुद्रां ज्ञानमयी दधानभवरां पद्मासने संस्थितम्।।७।।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवम्।
पश्यन्तीं मुकुटाङ्गादादिविविधैः कल्पोज्ज्वलाङ्गं भजे।।८।।
ॐ रामो रमाकरो दीर्घो रक्तनेत्रो रमापतिः।
रणभूमिबिहारी च रक्तपादो रणच्छविः।।९।।
रघुवीरः महावीरो धीरो वै सर्वराट् रविः।
रेवानाथार्चितपादो रामो राजीवलोचनः।।१०।।
राजधर्मप्रियोऽरिष्टो विशिंसो राक्षसान्तकृत्।
रामो अनन्तमर्यादापालको राघवो हरिः।।११।।
रम्भाफलकृताहारी रम्भाप्राणसुरोत्तमः।
रमारमणसर्वेशो रघुवंशपालकः।।१२।।
रत्नरत्नानि वर्माणि दिव्यरत्नविभूषितः।
ऋषिश्चरो महाप्राज्ञो राजत्केयूरकुण्डलः।।१३।।
रञ्जको भञ्जको खर्वो रक्तवस्त्रसदाप्रियः।
रणमूर्त्ति रणेकर्मी रणध्यानपरायणः।।१४।।
रणयुद्धरतो विद्वान् रणविद्यातिचातुरः।
रिम्फतुम्भस्फुराङ्गानि राजीवो राजसप्रियः।।।१५।।
रम्यमूर्ति राज्यभोगी राज्यभोगप्रदः पुमान्।
रमाकर्मरतो वीरो रामः सन्तुष्टचेतसः।।१६।।
रमाविहारी रघुराट् रमाशक्त्यैकविग्रहः।
रमाविग्रहधारी च रमाध्यानपरायणः।।१७।।
रमाविग्रहधारी च रमाध्यानपरायणः।
रमाऽभिचारनिरतो रमाऽऽज्ञापरिपालकः।।१८।।

रमारमैकसन्तुष्टो रमारमणवत्सलः।
रमाप्रमोदसहितो रमा अग्रगतो हरिः।।१९।।
रमासहायो भगवान् रावणप्राणहारकः।
रमासर्वकरी साक्षी रामभद्रो रमानिधिः।।२०।।
रमाकान्तो रमानाथो राघवोऽरिष्टभञ्जनः।
रमा विश्वस्य जननी राघवेन्द्रस्वरूपधृक्।।२१।।
रमाप्रचारी भगवान् रमासम्बोधनः प्रभुः।
रमाकार्यरतो रिक्तो रमालावण्यसम्भवः।।२२।।
रामादानरतो श्रीशो रमापालनपालकः।
रमारमेन्दुरक्ताङ्गो रक्तविग्रहविग्रहः।।२३।।
रमादयाकरो विष्णुः आदिनारायणो कविः।
रमाविश्वस्वरूपात्मा श्रीकृष्णः कालशासनः।।२४।।
रमासर्वकरीमन्त्रः रामचन्द्रमनुव्रतः।
राघवो भाग्यवानः वीरो रणमध्ये जयप्रदः।।२५।।
रमा संघेन संरम्भा रमापूजा सदाप्रियः।
रमाहास्य स्वहासी च रमासख्यैकसुन्दरः।।२६।।
रमाविधानसम्पन्नो रमानन्दनकारकः।
रमासर्वपरिप्रोता रमाकारणकारणः।।२७।।
रमामानप्रकाशी च रमाज्ञानविशारदः।
रमालेखनलेखः च रमाबेला रमापतिः।।२८।।
रमासङ्कटहर्त्ता च नृसिंहो भक्तवत्सलः।
रमा सर्वतः सहितो तस्याज्ञापरिपूर्णतः।।२९।।
रामचन्द्रश्चन्द्र लक्ष्मी रमाचर्चितपादपः।
रमालोकविलासी च रमा रामस्य सर्वदा।।३०।।
रमासुधर्मकर्मा च रमासर्वार्थसाधकः।
रमाकीटपतङ्गाद्या रमा सर्वमिदं जगत्।।३१।।
रमापादमहापुण्यमयो रामो धुरन्धरः।
रमाप्रवीणो विश्वात्मा सर्वात्मा विश्वपूजितः।।३२।।
रमास्थावररूपो च रघुवंशेऽतिनिर्मलः।
रमाप्रसादसहितो रमाचञ्चलचञ्चलः।।३३।।

रमाभरणभूतात्मा रमापोषणकारकः।
रमापूर्णितो पूर्णात्मा रमावाराहसंयुतः।।३४।।
रमाकूर्मेणसहितो रमामत्स्यसमन्वितः।
रमानृसिंहसहितो रमावामनसंयुतः।।३५।।
रमा रामेणसहिता रमाकृष्णपरायणा।
रमा बौद्धस्वरूपा च रमा कल्किस्वरूपधृक्।।३६।।
रमाविष्णुस्वरूपात्मा रमा रामः सदागतिः।
रमा गतिस्वरूपात्मा रमासंसर्गसङ्गमः।।३७।।
रमाप्रधानमानसो रमासर्वेश्वरो हरिः।
रमाशरीरवासी च रमाविज्ञानदर्शकः।।३८।।
रमातत्त्वोपदिष्टा च रमामन्त्रपरायणः।
रमाभोगप्रदाता च रमादुःखविमोचकः।।३९।।
रमासुरेन्द्रचर्चितो तु रमा मानसमानसः।
रमातर्पणतृप्तो च रमागाथाऽरुणाकृतिः।।४०।।
रमागौरिमयीमूर्त्तिः रमाश्यामस्वरूपिणी।
रमा पीतस्वरूपा च रघुनाथो पुरातनः।।४१।।
रमाकरो रमादान्तो रमासत्त्वो रमाछविः।
रमाऽऽधारो महावीरो रमा अव्यक्तदर्शनः।।४२।।
रमातत्त्वे परिज्ञानी रमाराज्यावहारकः।
रमारेवातटे धीरो राममन्त्रजपोत्कटः।।४३।।
रमासुरेन्द्रवन्द्यो च रघुः सर्वाङ्गसुन्दरः।
रमा आब्रह्मसंयुक्ता राघवस्य प्रिया सतिः।।४४।।
रमा यज्ञमयी मूर्तिः रामचन्द्रस्य सङ्गतिः।
रमारूपी रामचन्द्रो परब्रह्मस्वरूपकः।।४५।।
रक्तचन्दनलिप्ताङ्गो रक्तमाल्यानुलेपनः।
रक्तवस्त्रविलासी च राघवो रघुपुङ्गवः।।४६।।
रक्तपुष्पप्रियो रामा वेदविद्याविशारदः।
रमा सेवाकरी यस्य सत्यसङ्घः प्रतापवान्।।४७।।
राजाधिराजो भगवान् चतुर्धा मूर्तिधारकः।
राजेन्द्रो भवहर्त्ता च राक्षसेन्द्रवरप्रदः।।४८।।

राजकीर्त्तिर्लोकमूर्त्तिः राम: सत्यपराक्रमः।
रमा यस्यार्धदेहस्था रामो घोराद्यमर्दनः।।४९।।
राघवेन्द्रो वीरभद्रो रणकर्कशकर्कशः।
राकिन्याद्यामहाशक्तिः सेव्यमानपदाम्बुजः।।५०।।
रमारमिण्यासर्वेशो महाराजो महाद्युतिः।
राज्यदो भक्तभक्तानामभक्ताना च किङ्करः।।५१।।
रतिप्रियो रतिनाथो रागी रागविशारदः।
रविशशिचरो भद्रः ग्रहरूपी जनार्दनः।।५२।।
रामकला रामक्लिन्नो रमाभाग्यो रमाऽङ्गदः।
रामभवो भवो भीमो भयभीताविनाशकृत्।।५३।।
रमाक्रियो रमावीर्यो सर्वधर्मैकसाधकः।
रक्तपानप्रियो रामो रक्तपानकरः प्रभुः।।५४।।
रक्तमांसप्रियो वीरो नारायणस्वरूपकः।
रक्तास्थिचर्वको विद्वान् दीनानाथो दिनप्रभुः।।५५।।
रमारक्तेश्वरो शुद्धो रामश्चैतन्यचेतसः।
रमा अपूर्वकर्मज्ञो धर्मकर्मप्रवर्तकः।।५६।।
रामो विश्वस्य कर्ता च रामो विश्वस्य नन्दनः।
रामो विश्वस्य लुप्ता च रामो विश्व कुलान्तकः।।५७।।
रामो विश्वस्य भर्त्ता च रामो राज्याधिपेश्वरः।
रामो जगद्धितो वीरो रामः सर्वार्थसाधकः।।५८।।
रामो विरामो विरजो कौशल्यानन्दनवर्धनः।
रामः सुरातृप्तिकर्ता रामो मांसस्य भक्षकः।।५९।।
रामः श्रीशाम्भवः साक्षात् श्रीसीता शाम्भवी परा।
रामश्चक्रप्रसारी च रामस्त्रैलोक्यव्यापकः।।६०।।
रामः सदाशिवो मूर्त्तिः कालमूर्तिर्दिगम्बरः।
रामः कृपाकरो देवो विश्वव्यापी निरञ्जनः।।६१।।
रामो निरामयो नित्यो नित्यसर्वगतोऽव्ययः।
रामो वायुस्वरूपात्मा रामाकाशैकरूपकः।।६२।।
रामो धरामूर्त्तिरूपो रामः कालान्तको हरिः।
रामो विभीषणश्रीदः परब्रह्ममयोदितः।।६३।।

रामो राक्षसहन्तारो राक्षसानां कुलान्तकः।
रम्यमानपदाम्भोजः रमते सकलं जगत्।।६४।।
रुक्मिणीप्रियकर्त्ता च रुक्मिणीमनसेप्सितः।
रुक्मिणी चार्थदाता च रुक्मिणी च लभो हरिः।।६५।।
रुक्मिणीसिद्धिदः सिद्धो सिध्यसाध्यादिवन्दितः।
रुक्मिणीप्रियभाग्यश्च रुक्मिणीभाग्यवर्धनः।।६६।।
रुक्मिणीभक्तिभक्तो च रुक्मिणीसौख्यदर्शकः।
रुक्मिणीश्रीस्वरूपा च रुक्मिणीप्राणनायकः।।६७।।
रुक्मिणीभोगभुक्तश्च, रुक्मिणीभगतर्पणः।
रुक्मिणीदुःखहर्त्ता च रुक्मिणीदिव्यदर्शनः।।६८।।
रुक्मिणीरूपरूपा स्त्रीरूपा च पतिव्रता।
रुक्मिणीसङ्गसङ्गा च रामो नारायणोऽव्ययः।।६९।।
रुक्मिणीराज्यदाता च रुक्मिणीवाक्यसिद्धिदः।
राधाऽऽराधितवित्तात्मा राधावन्दित सर्वदा।।७०।।
राधानामसदाऽऽनन्दः राधात्रैलोक्यमोहिनी।
राधासिद्धि सुनिष्ठा च, राधाभक्तिरतो रघुः।।७१।।
राधारूपी रामचन्द्रो, राधामोहनमोहनः।
राधामन्त्रस्वरूपा च, श्रीमान्दाशरथिः प्रभुः।।७२।।
राधासुखनिधाना च, रामो विश्वस्य मोहनः।
राधाप्राणतृप्तिकरो राधाकर्मप्रचारकः।।७३।।
राधासत्यव्रताधीनो रामनाम सदागतिः।
रकारः सर्वदेवानां साक्षात् कालानलः प्रभुः।।७४।।
रकारः सर्वदेवानां तेजपुञ्जः सनातनः।
रकारः सर्वभूतानां जीवरूपी जनार्दनः।।७५।।
रकारः सर्वजीवानां सर्वपापस्य दाहकः।
रकारः सर्वसौख्यानां सिद्धिदः तु पुरातन।।७६।।
रकार सर्वविद्यानां वेदस्तत्त्वसनातनः।
रकारः सर्वसाध्यानां साधकोऽनन्तरूपधृक्।।७७।।
रकारः सर्वभूतानां व्याप्य व्यापकमीश्वरः।
रकारोत्पद्यते नित्यं रकारो लीयते जगत्।।७८।।

रकारो जायते ब्रह्मा रकारो जायते हरिः।
रकारो जायते शम्भुः रकारः सर्वशक्तयः।।७९।।
रकारो निर्विकल्पश्च शुद्धबुद्ध सदाऽव्ययः।
रकारः सर्वकामश्च परिपूर्णमनोरथः।।८०।।
रकारः सर्वदुष्टानां नाशको रघुनायकः।
रकारः सर्वसिद्धीनां स्मरणात् दायको गुरुः।।८१।।
रकारो धर्मकामानां मोक्षश्चार्थैकसिद्धिकृत्।
रकारः सर्वसत्त्वानां महामोदमयः स्वराट्।।८२।।
रामहास्यकारी माया, रकारो वसते सदा।
रामकीर्त्तिकरी माया, मायारामयशस्करी।।८३।।
रामतेजकरी माया सर्वकालेषु सर्वदा।
रामराज्यकरी माया राजराजमयो हरिः।।८४।।
रामभोगकरी माया कालकाले निरन्तरम्।
रामदुर्गमहन्ता च रामसौभाग्यसुन्दरः।।८५।।
रामसर्वार्थदाता च भगवान् भवभञ्जनः।
रामनाम सदाऽऽनन्दो रामनाम सदागतिः।।८६।।
रामनाम सदातुष्टो रामनामस्वरूपकः।
रामनामपरा वेदाः रामनाम सदाशुचिः।।८७।।
रामनामपरा यज्ञाः रामनामपरो ध्वनिः।
रामनामपरं बीजं रामनामपरं जगत्।।८८।।
रामो उदारकर्मा च रामान्तं च सकलं जगत्।
रामो दयाकरो दीर्घो दुःखदारिद्र्यमर्दनः।।८९।।
रामनाम परं ज्ञानं विश्वं रामस्य चाश्रयम्।
रामात् परतरं नास्ति कार्यकारणगौरवम्।।९०।।
रामो जपोनिधिर्देवो दीर्घनेत्रो द्युतिच्छदः।
रामः शोकस्य भोक्ता च राजराजो धनाधिपः।।९१।।
रामो रणधरः श्रीमान् चापतूणीरपूर्णतः।
रामः पराक्रमी कामी कामदेवस्य पालकः।।९२।।
रामो हरः पार्वतीशो स्मर्यन्ते च दिवानिशम्।
राजयोगस्य सिद्धीनां राम राजेश्वरोऽभवत्।।९३।।

रकारादीनि नामानि शृण्वतो मम पार्वति!।
मनः प्रसन्नतामेति रामनामाभिशङ्कया:।।९४।।
रामः सुरेन्द्रो इन्द्रश्च नारदाद्या महर्षयः।
रामस्सेवकसेव्यश्च राघवो विश्वराघवः।।९५।।
रामस्वरूपा रामात्मा रामः प्राणपतिप्रियः।
रामः कृपाकरी मूर्तिः रामभद्रो जयप्रदः।।९६।।
रामनाम सदा सेव्यो रामचार्यो मुनीश्वरः।
रामः प्रीतिकृपासिन्धुः रामनाम धनप्रदः।।९७।।
रामनामो महावीर्यो पूर्णपुण्यविवर्धनः।
रङ्कतङ्कश्च कृत्यात्मा रेणुकापार्थदायकः।।९८।।
रवीन्द्रो हरिः रघुवरो राजराजो महाभुजः।
रविः ध्यानं रविः पूजा रविः मूर्तिसनातनः।।९९।।
रविः सर्वस्य दाता च तेजपुञ्जमयः पुमान्।
रविः कालनिधिः साक्षात् कष्टभ्रष्टस्तपःक्रियाः।।१००।।
रविः कैवल्यवर्णा च रविस्तिग्रोग्रवर्चसः।
रविर्नित्यगतो ध्येयो रविः स प्रिये! वद।।१०१।।
रविर्हर्षा रविः कर्षा रविर्गोशारविर्हुतः।
रविर्दाता रविर्भोक्ता रविर्लोकपितामहः।।१०२।।
रविमूर्त्तिषु च सर्वेषां देवानामालयं परम्।
हविर्हवी महाप्राज्ञो रमेशः पारमार्थिकः।।१०३।।
ऋक्षसख्यो ऋक्षभृत्यो ऋक्षमन्त्रीकृतः प्रभुः।
ऋक्षराज्यप्रदो ऋक्षो ऋक्षाणां पालनोद्यतः।।१०४।।
ऋक्षराजवधोपेतो सुग्रीवस्यार्थिदो विभुः।
राजराजेश्वरो विष्णुः राजराजेश्वरी क्रिया।।१०५।।
राजचक्रप्रवासी च नष्टराज्यार्थी सिद्धिकृत्।
राजराजाधिराजेशो वीरः सत्यप्रतापवान्।।१०६।।
राजसेवाकरो जिष्णुः इन्द्रः सर्वाऽरिबलेष्टदः।
रुरुधर्मपरीधानो रौरवाघहरो हरिः।।१०७।।
राजधानी राजकामी महाराजो मुनीश्वरः।
राजप्रियो राज्यभोगो रजोगुणगुणार्चितः।।१०८।।

रघुवंशी रघुश्रेष्ठो राघवो ज्ञानविग्रहः।
रामो रमाप्रियो नित्यो मुनीनां मानसाधिपः।।१०९।।
रामो नित्यनिजानन्दो रामो भक्ते दृढव्रतः।
राजितः सर्वसर्वाङ्गो राजतकेयूरकुण्डलः।।११०।।
तूणतूणीरवाणाश्च राजच्चापधरो विभुः।
जगच्छविः कृपासिन्धुः नीराजितपदाम्बुजः।।१११।।
राजसत्येश्वरो वीर्यो विराज सर्वदुःखहा।
रिक्तभक्तप्रसन्नात्मा रिक्तासक्तः वरप्रदः।।११२।।
रिक्तप्रियो रिक्तमार्गो रिक्तार्थैकविमर्दनः।
रिक्तसेवा रिक्तवर्गो रिक्तस्वभावभावनः।।११३।।
रिक्तकर्त्ता रिक्तछेता रिक्तविश्वप्रियंवदः।
रिक्तधर्मा निवासी च सर्वाशापरिपूरकः।।११४।।
रिक्तवर्षा रिक्तकर्मा रिक्तधर्मबहिष्कृतः।
रिक्तसूक्तो रिक्तविद्या धनुर्विधाधरोहरः।।११५।।
रिक्तवेदविधानेन ऋग्वेदस्य प्रियो बलः।
रिक्तशास्त्रप्रतिज्ञा च रिक्तरिक्तोज्ज्वलः प्रभुः।।११६।।
रिक्तपूज्यो रिक्तसेव्यो नित्यरिक्तो तपस्विनः।
रामः परात्मा भगवान् स भाग्यो भाग्यवर्धनः।।११७।।
रामकमलपत्राक्षो रामस्तत्त्वप्रकाशनः।
रामः शुभार्चितो नित्यो कैवल्यागमनिष्ठितः।।११८।।
रामः सुग्रीववाल्मीको रामो वाल्मीकिपूजितः।
रामो निरामयो देवो जाम्बवान् भगवान् भवः।।११९।।
राजसेवानिवासी च राजकर्ममनुव्रतः।
राजतकटकधारी च विश्वरूपी जनार्दनः।।१२०।।
रामो विद्यानिधिः कान्तो काकपक्षधरो बुधः।
राक्षसारिर्ब्रह्मबन्धुः परंब्रह्मेन्द्रसत्कृतः।।१२१।।
रामो इच्छाप्रचारी च भगवान् भूतभावनः।
रामात्मा परमात्मा च विश्वरूपः प्रियान्वितः।।१२२।।
रामो विरामो वैराग्यो महाविज्ञानभैरवः।
कुकर्महर्त्ता च रामः श्रीदः क्रियार्थकृत्।।१२३।।

रामः संसारिणां साध्यं सौख्यदः शरणार्थिनः।
रामो धरापतीनां च नीतिरूपी सहस्रपात्।।१२४।।
राक्षसोऽव्यक्तमूर्त्तीश्च भूतभव्यभवः परः।
रीतिनीतिरतो धीमान् उग्रसेनो प्रतिप्रदः।।१२५।।
ऋणभयविनिर्मुक्तः करुणामयशङ्करः।
रामो गणपतिर्गव्यो सिद्धिबुद्धिसमन्वितः।।१२६।।
रामो भैरवमूर्त्तिश्च रामो विश्वस्य दर्पणः।
रामः श्रीकामभूतात्मा रामो दिक्मण्डलावृतः।।१२७।।
रामो निर्वाणवर्णश्च निर्वाणार्थप्रबोधकः।
रामः श्रीसर्वनैमित्यः रामो नित्यध्रुवो ध्रुवः।।१२८।।
रामो द्रव्यमयो गम्यो रामः पातालनायकः।
रामो ब्रह्माण्डमध्यस्थो गोब्राह्मणहिते रतः।।१२९।।
रामो द्वितीयःसम्पन्नो निवासी गहनो गुहः।
रामो निष्कूटरूपात्मा निष्कूटानां भयङ्करः।।१३०।।
रामो भीरुमयो गम्यो देवारिर्भयवर्धनः।
रामो तरङ्गसहिता रामाभार्यारतिप्रियः।।१३१।।
रमाकेलिकुलाचारो रमाऽऽचारगुरोर्गुरः।
रश्मिप्रियकरो रम्यो रश्मिदीप्तिकरः पुमान्।।१३२।।
रामस्सन्तुष्टविश्वात्मा रागो गानशुभाननः।
रागसारो रागवर्ती रागी रागो विरागहा।।१३३।।
रागसेवा राजनीतिः, रतिदो गतिदः स्वरः।
राजिका भोजनासक्तो राजिकागन्धसत्कृती।।१३४।।
राजिकाविजयाधीरो राजिकाशाकभोजनः।
राजिकाशत्रुहर्त्ता च राजिकानिन्दकान्तकः।।१३५।।
राजिकाहोमसन्तुष्टो रामचन्द्रो दयानिधिः।
राजिकादर्शनप्रीतो राजिकायाः लघुकृतः।।१३६।।
राजिकाभञ्जकभीमो राजिकाभावसेवकः।
राजिकाव्रतदीप्ताङ्गो राजिकाभाग्यवर्धनः।।१३७।।
राजिका कुलविद्या च रामचन्द्रो महेश्वरः।
राजिकास्तम्भनोत्सर्गो राजिता भक्तरक्षिता।।१३८।।

राजिकामुख्यवीर्या च राजिकाशक्तिसम्पुटा।
राजिकासङ्गसङ्गश्च राजिकाचन्दनोद्यता।।१३९।।
राजिकाविश्वविश्वा च राजिकारिर्विनाशनः।
राजिकापुष्पपुष्पा च रामचन्द्रसदाप्रियः।।१४०।।
राजिकासर्ववश्या च राजिकाभीतिभञ्जनः।
राजिका सौम्यसौम्या च राजिकादुष्टखण्डनः।।१४१।।
राजिका क्रूरकर्मा च राजिकाऽनुग्रहविग्रहः।
राजिकापत्रपत्रा च महाराजो धुरन्धरः।।१४२।।
राजिकातीव्रवेगा च राजिकावासकोष्टदः।
राजिकामोहनो देवो देवदेवो हरीश्वरः।।१४३।।
रामनामपरो मन्त्रो रामनामपरो क्रिया।
रामनामपरो यज्ञः रामनामपरं जपः।।१४४।।
रामनामपरे सारं रामलक्ष्मीसमावृतः।
रामो अभयकर्त्ता च रामो अरिविनाशनः।।१४५।।
रामो जले चान्तरिक्षे रामो मोदप्रमोदकृत्।
रामश्शुभानि कर्माणि रामोऽपि अशुभनाशनः।।१४६।।
रामो मनोभवो देवो मनोभय जगन्मयः।
रामो दामोदरो श्रीशो ऋषीकेशो महाबलः।।१४७।।
रामः माधवस्सर्वो श्रीदः पुण्यजनावृतः।
रामो दैत्यारिः सर्वज्ञो नीललोहितलोचनः।।१४८।।
रामो महाविघ्नहरो रामः श्रीत्रिपुरान्तकः।
रामो स्वयम्भू ऋषीकेशो ईशः कल्मषापहः।।१४९।।
रामः पीतारुणाश्यामो सर्वदाऽऽनन्दवर्धनः।
रामो साक्षात् कृतध्वंसी व्योमकेशस्वरुपकृत्।।१५०।।
रामः सर्वच्छविः कान्ता शान्तो विश्वस्य शासनः।
रामश्शर्वाङ्गी महासेनिज्ञानदो महाभुजः।।१५१।।
रामो हरः स्मरो नामः सर्वदा धर्मवर्धनः।
रामो स्वयंवीतिहोत्रो रामः साक्षाद् धनञ्जयः।।१५२।।
रामः कृशानुरेता च रामः पिङ्गलपाटवः।
रामः स्वयं सुरश्रेष्ठो राम एव त्रिलोचनः।।१५३।।

राम एव महावीर्यो रामो दिव्यशुचिर्व्रतः।
राम एव निजं नित्यं बुद्धीन्द्रियमनामयम्।।१५४।।
राम एव महाव्यासो राम एव महाबलः।
राम एव निजं ब्रह्म राम एव महातपः।।१५५।।
राम एव महाहंसो रामात्मा गोचरो नरः।
रामो नित्यनिराकारो रामो भरतरूपकः।।१५६।।
रामस्यत्रैलोक्यमध्यस्थो रामः सत्यवसुन्धरः।
रामः कुमाररूपात्मा रामः पाखण्डभञ्जनः।।१५७।।
रामो मिथ्याविनाशी च रामः सत्यप्रवर्तकः।
रामो विश्वासवासी च सत्यवासी सरोरुहः।।१५८।।
रामः सर्वगुहागम्यो भक्तानां मानसेष्टदः।
रामः प्रभाकरो ज्येष्ठो ईप्सितार्थप्रदर्शकः।।१५९।।
रामस्तालाङ्कभूभारहारणो मदभञ्जनः।
रामः प्राणप्रपानश्च रामोदानसमानकः।।१६०।।
रामो नागश्च कृकलो देवदत्तो रमेश्वरः।
रामो धनञ्जयः सत्यो राम पञ्चजनात् वयः।।१६१।।
रामः क्रूरस्य क्रूरात्मा वैरामः पुरुषप्रियः।
रामश्छलनिहन्ता तु रामो दिव्यान्नदायकः।।१६२।।
रामो दिव्याङ्गनाभोगी रामो ज्ञानगतां वरः।
रामो निजपरो मूर्त्तिः मानवाकृतिरीश्वरः।।१६३।।
रामः श्रीतक्षको तीव्रो महासत्त्वेति चञ्चलः।
रामो द्वयहृदा साक्षी सहिष्णुर्जगदीश्वरः।।१६४।।
रामो वीरमतां श्रेष्ठो सर्वधर्मेषु वन्दितः।
रामः श्रीपुरुषो छन्दो क्षेत्रज्ञोऽक्षरमुत्तमः।।१६५।।
रामो अपां निधिः सौम्यो भगवान् कुम्भसम्भवः।
रामो अशोकमूर्त्तात्मा भक्तानां शोकनाशनः।।१६६।।
रामो मत्स्यस्वरूपात्मा सर्वसिद्धिप्रदो गिरः।
रामो महोक्षो वेदात्मा अनुकूलप्रदो भवः।।१६७।।
रामः सर्वाङ्गमानन्दी नित्यलक्ष्मीविलासदः।
इतीदं कथितं देवि! रामनामसहस्रकम्।।१६८।।

गोपनीयं प्रयत्नेनं पठनीयं परात् परम्।
न देयं कस्य देवेशि! न वाच्यं कस्यचित् प्रिये!।।१६९।।
ये ये प्रयोगा तन्त्रेषु तै तैर्यत् साधयेत् फलम्।
तत् सर्वं सिध्यति क्षिप्रं रामनामैव कीर्त्तनात्।।१७०।।
रोगार्त्तो मुच्यते रोगात् बन्धो मुच्येत बन्धनात्।
भीतो भयात् प्रमुच्येत देवि सत्यं न संशयः।।१७१।।
स्त्रीहत्या बालघाती च गौहत्या ब्रह्मशासनः।
सर्वहत्याक्षयं यान्ति पाठमात्रेण पार्वति!।।१७२।।
सोऽपि गुर्वङ्गनागामी तथा विश्वासघातकी।
पाठमात्रेण देवेशि! सर्वपापक्षयो भवेत्।।१७३।।
जीवघाती प्राणहर्त्ता धर्मनष्टस्तु यो नरः।
पठनात् ब्रह्मसायुज्यं प्राप्नुयात् नात्र संशयः।।१७४।।
अयोनिगामी यो मूढ़ो ब्रह्मण्या सह सङ्गमी।
श्रीरामनामसाहस्त्रं पठनात् मुक्तपातकः।।१७५।।
कुयोनिमैथुनाद् दुष्टोः दुष्टदुर्बुद्धिचेतसः।
एकावृत्त्या महेशानि! सर्वपापैः प्रमुच्यते।।१७६।।
इतीदं रामसाहस्त्रं दशवांर पठेद् यदि।
स गच्छेत् वैष्णवलोकं वायुर्नावमिवाम्भसि।।१७७।।
भूतप्रेतपिशाचाद्या वेताला सिद्धचेटकाः।
कूष्माण्डा राक्षसा घोरा भैरवाः ब्रह्मराक्षसाः।।१७८।।
श्रीरामनामग्रहणात् पलायन्ते दिशो दश।
श्रीं ह्रीं रां ल्कीं नमः स्वाहा एवमष्टाक्षरो मनुः।।१७९।।
जपेत् सहस्त्रनामान्ते मोहयेत् सकलं जगत्।
यत्र यत्र जपेत् धीरा शुचिर्भूत्त्वैकमानसः।।१८०।।
तत्र तत्र जपो भूयात् नात्र कार्या विचारणा।
पौर्णमास्याममावास्यां संक्रान्तौ ग्रहणेष्वपि।।१८१।।
एकादश्यां नवम्यां वा सावधाने तु साधकः।
पठेत् सहस्त्रनामाख्यं रक्षोऽत्र मोक्षस्य साधनम्।।१८२।।
मोहनं सर्वजीवानां भूयात् रामप्रसादतः।
एकावृत्त्या लभेत् लक्ष्मीं, द्विरावृत्त्या जगद्वशी।।१८३।।

त्रिरावृत्त्या पठेन्नित्यं षट्मासात् स शिवो भवेत्।
चतुर्वारं पठेन्नित्यं पुत्रवान् कीर्तिमान् भवेत्।।१८४।।
पञ्चवारं पठेन्नित्यं दिव्यकायो भवेन्नरः।
षड्वारं यः पठेत् नित्यं सर्वसिद्धीश्वरो भवेत्।।१८५।।
सप्तवारं पठेत् स्तोत्रं वाचासिद्धिः प्रजायते।।१८६।।
अष्टवारं पठेद् देवि! षडङ्गाभ्यां समो गतः।
साक्षात् श्रीरामचन्द्रस्य दर्शनं लभते ध्रुवम्।।१८७।।
तुलस्याश्वत्थयोर्मध्ये शालिग्रामस्य सन्निधौ।
एकाहारी भूमिशायी जितक्रोधी जितेन्द्रियः।।१८८।।
नित्यभक्त्याऽर्चयेद् विष्णुं स मुक्तः सर्वपातकैः।
श्रीरामं च हनूमन्तं सुग्रीवं च विभीषणम्।।१८९।।
अङ्गदं जाम्बवन्तं च स्मृत्वा पापैः प्रमुच्यते।
राजद्वारे च संग्रामे नदीनदसमुद्रगे।।१९०।।
दुर्भिक्षे विग्रहे घोरे श्मशाने च चतुष्पथे।
यत्र यत्र भये प्राप्ते तत्र तत्र पठेद् ध्रुवम्।।१९१।।
विजयं सर्वमाप्नोति दुर्लभं सुलभं भवेत्।
सत्यं सत्यं पुनः सत्यं गोप्तव्यं पशुसन्निधौ।।१९२।।
तव भक्त्या मया ख्यातं नाख्येये यस्य कस्यचित्।
इहलोके सुखी भुक्त्वा परे मुक्तिर्भविष्यति।।१९३।।
तत्र रूपैः विविधाकारैः सेव्यमानं परात् परम्।
विश्वावसुं चित्रकेतुं चित्रसेनाद्यलूककम्।।१९४।।
श्रीहरिः ॐहरिः, रां रां हरिः, ल्कीं ह्रीं स्वाहा।

*।। श्री ब्रह्मयामले सृष्टिप्रशंसायां उमामहेश्वरसंवादे*
*राकारादि श्रीरामसहस्रनाम स्तोत्रम् ।।*